❋ अथ ❋

# दुर्गा कवच, अर्गला ।

❋ कीलकं प्रारम्भः ❋

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीगणेशाय नमः ॥

# ॥ अथ देव्या कवचं प्रारभ्यते ॥



ओं नमश्चण्डिकायै ॥ मार्कण्डेय उवाच ॥

ओं यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ॥
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ॥१॥

ब्रह्मोवाच ।

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकं ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २ ॥ क.
दु. प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ।
४ तृतीयं चंद्रघंटेटि कूष्माण्डेति चतुर्थकं ॥ ३ ॥
पंचमं स्कंदमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमं ॥४॥
नवमं सिद्धिदात्री च नव दुर्गाः प्रकीर्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥५॥ ४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ॥
दु. विषमे दुर्गमे चैव भयार्ताः शरणं गताः ॥६॥ क.
५ न तेषां जायते किञ्चिदशुभं रणसंकटे ॥
नापदं तस्य पस्यामि शोक दुःख भयं नहि ॥७॥
यैस्तु भक्त्या स्मृता नूनं तेषां सिद्धिःप्रजायते ॥
ये त्वां स्मरंति देवोशि रक्षसे तान्न संशयः ॥८॥
प्रेतसंस्था तु चामुंडा वाराही महिषासना ॥ ५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऐंद्री गजसमारूढ़ा वैष्णवी गरुडासना ॥९॥
माहेस्वरी बृषारूढ़ा कौमारी शिखिवाहना ॥
लक्ष्मी पद्मासना देवी पद्महस्ता हरिप्रिया ॥१०॥
श्वेतरूपधरा देवी ईस्वरी बृषवाहना ॥
ब्राह्मी हंससमारूढ़ा सर्वाभरणभूषिता ॥ ११ ॥
इत्येता मातरः सर्वा सर्वयोगसमन्विताः ॥
नानाभरणशोभाढ्या नानारत्नोपशोभिताः ॥१२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृश्यन्ते रथमारूढा देव्यः क्रोधसमाकुलाः ॥
दु. शंखं चक्रं गदां शक्तिं हलं च मुसलायुधं ॥ क.
७ खेटकं तोमरं चैव परशुं पाशमेव च ॥ १३ ॥
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमं ॥
दैत्यानां देहनाशाय भक्तानामभया च ॥१४॥
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ॥
नमस्ते स्तु महारौद्रे महाघोरपराक्रमे ॥१५॥ ७

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. महाबले महोत्साहे महाभय बिनाशिनि ॥ क.
८ त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्द्धिनि॥१६॥
प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ॥
दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ॥१७॥
प्रतीच्यां वारुणी रक्षेद्वायव्यां मृगवाहिनी ॥
उदीच्यां पातु कौमारी ईशान्यां शूलधारिणी॥१८॥ 
उर्ध्वं ब्रह्माणी में रक्षेदधस्ताद्वैष्णवी तथा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं दश दिशो रक्षेच्चामुण्डा शवबाहन ॥१९॥
जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥
अजिता बामपार्श्वे तु दक्षिणे चापराजिता॥२०॥
शिखामुद्योतिनी रक्षेदुमा मूर्ध्नि व्यवस्थिता ॥
मालाधरी ललाटे च भुवौ रक्षेद्यशस्विनी ॥२१॥
त्रिनेत्रा च भुवोर्मध्ये यमघण्टा च नासिके ॥
शंखिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासिनी ॥२२॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु कपोलौ कालिका रक्षेत्कर्णमूले तु शांकरी ॥ क.
नासिकायां सुगंधा च उत्तरोष्ठे च चार्चिका ॥२३॥
१० अधरे चामृतकला जिह्वायां च सरस्वती ॥
दंतान्रक्षतु कौमारी कंठदेशे तु चंडिका ॥ २४॥
घंटिकां चित्रघण्टा च महामाया च तालुके ॥
कामाक्षी चिबुकं रक्षेद्वाचं मे सर्वमंगला ॥२५॥ १०
ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ॥२६॥
स्कन्धयोः खङ्गिनी रक्षेद्बाहू मे वज्रधारिणी ॥
हस्तयोर्दण्डिनी रक्षेदम्बिका चांगुलीषु च ॥२७॥
नखाञ्छूलेश्वरी रक्षेत्कुक्षौ रक्षेत्कुलेश्वरी ॥
स्तनौ रक्षेन्महादेवी मनःशोकविनाशिनी ॥२८॥
हृदये ललिता देवी उदरे शूलधारिणी ॥
नाभौ च कामिनी रक्षेद्गुह्यं गुह्येश्वरी तथा ॥२९॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूतना नामिका मेढ्रं गुदे महिषवाहिनी ॥
कट्यां भगवती रक्षेज्जानुनी विंध्यवासिनी॥२०॥
जंघे महाबला रक्षेत्सर्वकामप्रदायिनी ॥
गुल्फयोर्नारसिंही च पादपृष्ठे तु तैजसी ॥२१॥
पादांगुलीषु श्री रक्षेत्पादाधः स्तलवासिनी ॥
नखान्दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ॥२२॥
रोमकूपेषु कौमारी त्वचं वागीश्वरी तथा ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. रक्तमज्जावसामांसान्यस्थिमेदांसि पार्वती ॥३३॥ क.
अन्त्राणि कालरात्री च पित्तं च मुकुटेश्वरी ॥
१३ पद्मावती पद्मकोशे कफे चूडामणिस्तथा ॥३४॥
ज्वालामुखी नखज्वालमभेद्या सर्वसंधिषु ॥
शुक्रं ब्रह्माणी मे रक्षेच्छायां छत्रेस्वरी तथा॥३५॥
अहंकारं मनो बुद्धिं रक्षेन्मे धर्मधारिणी ॥ १३
प्राणापानौ तथा ब्यानमुदानं च समानकम् ३६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. क. १४

वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ॥
रसे रूपे च गंधे च शब्दे स्पर्शे च योगिनी ॥३७॥
सत्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ॥
आयू रक्षतु वाराही धर्म्मं रक्षतु वैष्णवी ॥३८॥
यशःकीर्तिं च लक्ष्मीं च धनं विद्यां च चक्रिणी ।
गोत्रमिन्द्राणी मे रक्षेत्पशून्मे रक्ष चण्डिके ॥३९॥
पुत्रान्रक्षेन्महालक्ष्मीर्भार्यां रक्षतु भैरवी ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. पन्थानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा ॥४०॥ क.
राजद्वारे महालक्ष्मीर्विजया सर्वतः स्थिता ॥
१५ रक्षाहीनं तु यत्स्थानं वर्जितं कवचेन तु ॥४१॥
तत्सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ॥
पदमेकं न गच्छेत्तु यदीच्छेच्छुभमात्मनः ॥४२॥
कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ॥ १५
तत्र तत्रार्थलाभश्च विजयः सर्वकामिकः ॥४३॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्॥
दु. परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ॥ ४४ ॥ क.
१६ निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ॥
त्रैलोक्ये तु भवेत्पूज्यः कवचेनावृतः पुमान्॥४५॥
इदं तु देव्या कवचं देवानामपि दुर्लभम् ॥
यः पठेत्प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयान्वितः॥४६॥
दैवीकला भवेत्तस्य त्रैलोक्येष्वपराजितः ॥ १६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥ ४७॥ क.
दु. नश्यंति व्याधयः सर्वे लूताविस्फोटकादयः ॥
१७ स्थावरं जंगमं चैव कृत्रिमं चापि यद्विषं ॥४८॥
आभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ॥
भूचराः खेचराश्चैव कुलजाश्चोपदेशिकाः ॥४९॥
सहजा कुलजा माला डाकिनी शाकिनी तथा ॥ १७
अंतरिक्षचरा घोरा डाकिन्यश्च महाबलाः ॥५०॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहभूतपिशाचाश्च यक्षगंधर्वराक्षसाः ॥
ब्रह्मराक्षसवेतालाः कूष्मांडा भैरवादयः ॥५१॥
नश्यंति दर्शनात्तस्य कवचे हृदि संस्थिते ॥
मानोन्नतिर्भवेद्राज्ञस्तेजोवृद्धिकर पर ॥५२॥
यशसा वर्धते सोऽपि कीर्तिमंडितभूतले ॥
जपेत्सप्तशतीं चण्डीं कृत्वा कवचं पुरा ॥५३॥
यावद्भूमंडलं धत्ते सशैलवनकाननम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिका॥५४॥ क.
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभं ॥
१६ प्राप्नोति पुरुषो नित्यं महामायाप्रसादतः॥५५॥
लभते परमं रूपं शिवेन सह मोदते ॥५६॥

इति वाराहपुराणे हरिहरब्रह्मविरचितं
देव्याः कवचं समाप्तं ॥ १ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. # अथ अर्गला स्तोत्र प्रारम्भः। क.

२० ओंनमश्चण्डिकायै ॥ ऋषिरुवाच ॥

जयंती मंगला काली भद्रकाली कपालिनी ॥
दुर्गाक्षमा शिवाधात्री स्वाहास्वधानमोऽस्तुते॥१॥
जय त्वं देवि चामुण्डे जय भूतार्तिहारिणि ॥
जयसर्वगते देवि कालरात्रिनमोस्तुते ॥ २ ॥
मधुकैटभविद्रावि विधातृवरदे नमः ॥ २०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥४॥ क.
रक्तबीजवधे देवि चण्डमुंडविनाशिनि ॥
२१ रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥५॥
शुंभस्यैव निशुंभस्य धूम्राक्षस्य च मर्दिनि ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥६॥
वंदितांघ्रियुगे देवि सर्वसौभाग्यदायिनि ॥ २१
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अचिंत्यरूपचरिते सर्वशत्रुविनाशिनि ॥
दु. रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥८॥ क.
२२ न भ्यः सर्वदा भक्त्या चंडिके दुरितापहे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥९॥
स्तुवद्भ्योभक्तिपूर्वं त्वा चण्डिके व्याधिनाशिनि॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि॥१०॥
चण्डिके सततं ये त्वामर्चयन्तीहं भक्तितः ॥ २२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३- रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥११॥
२३ देहि सौभाग्यमारोग्यं देहि मे परमं सुखं ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१२॥
विधेहि द्विषतां नाशं विधाहे बलमुच्चकैः ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१३॥
विधेहि देवि कल्याणं विधेहि परमां श्रियं ॥ २३
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१४॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुरासुरशिरोरत्ननिघृष्टचरणेऽम्बिके ।
डु. रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१५॥ क.
२४ विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ॥
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥१६॥
प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ॥
रूपं देहि जयं देहि यशो देहि द्विषो जाहि ॥१७॥
चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ॥ २४

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

डु. रूप देहि जय देहि यशो देहि द्विषो जहि ॥१८॥ क्र.
२५ कृष्णेन सस्तुते देवि शस्वद्भक्त्या सदाम्बिके ॥
रूप देहि जय देहि यशो देहि द्विषो जहि ॥१९॥
हिमाचल सुता नाथ सस्तुते परमेश्वरि ॥
रूप देहि जय देहि यशो देहि द्विषो जहि ॥२०॥
इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ॥
रूप देहि जय देहि यशो देहि द्विषो जहि ॥२१॥ २५

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवि प्रचण्डदोर्दण्ड दैत्य दर्प्प विनाशिनि ॥

दु. रूप देहि जय देहि यशो देहि द्विषो ॥२२॥ क.

२६ देवि भक्तजनोद्दामदत्तानन्दोदयेम्बिके ॥

रूप देहि जय देहि यशो देहि द्विषो जहि ॥२३॥

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीं ॥

तारिणीं दुर्गसन्सारसागरस्य कुलोद्भवां ॥२४॥

इदं स्तोत्रम् पठित्वा तु महास्तोत्रम् पठेन्नरः । २६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ङ. सतु सप्तशती संख्या वरमाप्नोति संपदाम् ॥२५॥ क.

२७ इति श्रीमार्कण्डेयपुराणे अर्गलास्तोत्रं

सम्पूर्णम् ॥ २ ॥

अथ भगवत्याः कीलकस्तोत्र प्रारम्भः ।

ओं नमश्चण्डिकायै ॥ मार्कण्डेयउवाच ॥

विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ॥ २७

श्रेयः प्राप्तिनिमित्ताय नमः सामार्धधारिणे ॥१॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वमेतद्विजानीयान्मन्त्राणामपि कीलकम् ॥
दु. सोऽपि क्षेम मवाप्नोति सततं जाप्यतत्परः ॥२॥ क.
२८ सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ॥
एतेन स्तुवतां देवी स्तोत्रमात्रेण सिद्ध्यति ॥३॥
न मन्त्रं नौषधं तत्र न किंचिदपि विद्यते ॥
विनाजाप्येन सिद्ध्येत सर्वमुच्चाटनादिकम् ॥४॥
समग्राण्यपि सिद्ध्यँति लोकशङ्कामिमां हरः ॥ २८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. कृत्वा निमन्त्रयामास सर्वमेवामिदं शुभम् ॥५॥
स्तोत्रं वै चंडिकायास्तु तच्च गुप्तं चकार सः ॥ क.
२६ समाप्नोति सुपुण्येन तां यथावन्नियन्त्रणाम् ॥६॥
सोऽपि क्षेममवाप्नोति सर्वमेव न संशयः ॥
कृष्णायां च चतुर्दश्यामष्टम्यां वा समाहितः ॥७॥
ददाति प्रतिगृह्णाति नान्यथैषा प्रसिद्ध्यति ॥
इत्थंरूपेण कीलेन महादेवेन कीलितम् ॥ ८ ॥ २६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम् । क.
सासिद्धःसगणःसोपि गन्धर्वो जायते नरः ॥ ९ ॥
न चैवाप्यटतस्तस्य भयं क्वापि हि जायते ॥
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥१०॥
ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ॥
ततो ज्ञात्वैव सपन्नमिद् प्रारभ्यते बुधैः ॥ ११ ॥
सौभाग्यादि च यत्किंचिद् दृश्यते ललनाजने ॥ ३०.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दु. तत्सर्वं त्वत्प्रसादेन तेन जाप्यमिदं शुभम ॥१२॥ क.
शनैस्तु जाप्यमानेस्मिन् स्तोत्रे संपत्तिरुच्चकैः ।
३१ भवत्येव समग्रापि तत प्रारभ्यमेव तत् ॥ १३ ॥
ऐश्वर्य यत्प्रसादेन सौभाग्यारोग्यसम्पद ॥
शत्रुहानि परोमोक्ष स्तूयते सा न किंजनै ॥१४॥

॥ इति श्रीभगवत्याः कीलकस्तोत्रं समाप्तम् ॥

॥ शुभं भूयात् ॥



जार्ज प्रिंटिग वर्क्स, कालभैरव काशी में मुद्रित ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

❋ इति ❋

दुर्गा कवच, अर्गला ।

❋ कीलकं समाप्तः ❋

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## सूचीपत्र

| | | | |
|---|---|---|---|
| गीता भा० १८ अ० | १) | ब्रह्मानन्दी भजन | ॥=) |
| रामायण गु० मू० | ॥=) | रामायण बड़ा मू० | २) |
| मुहूर्तचिंतामणि भा. टी. | २॥) | बृहज्ज्योतिस्सार भा.टी. | १॥।) |
| सुखसागर बड़ा | १०) | सुखसागर मझोला | ६) |
| रामायण गुटका सटीक | ४) | रा भा टी मोटा अक्षर | १०) |

हर प्रकार की पुस्तकें मिलने का पता—

**गुल्लूप्रसाद केदारनाथ बुकसेलर, कचौड़ीगली बनारस।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

